नरसिंहपुराणे सूर्याष्टोत्तरशतनामावलिः विश्वकर्मकृता
ॐ आदित्याय नमः । सवित्रे । सूर्याय । खगाय । पूष्णे । गभस्तिमते ।
तिमिरोन्मथनाय । शम्भवे । त्वष्ट्रे । मार्तण्डाय । आशुगाय ।
हिरण्यगर्भाय । कपिलाय । तपनाय । भास्कराय । रवये । अग्निगर्भाय ।
अदितेः पुत्राय । शम्भवे । तिमिरनाशनाय नमः । २०

ॐ अंशुमते नमः । अंशुमालिने । तमोघ्नाय । तेजसां निधये ।
आतपिने । मण्डलिने । मृत्यवे । कपिलाय । सर्वतापनाय । हरये ।
विश्वाय । महातेजसे । सर्वरत्नप्रभाकराय । अंशुमालिने । तिमिरघ्ने ।
ऋग्यजुस्सामभाविताय । प्राणाविष्करणाय । मित्राय । सुप्रदीपाय ।
मनोजवाय नमः । ४०

ॐ यज्ञेशाय नमः । गोपतये । श्रीमते । भूतज्ञाय । क्लेशनाशनाय ।
अमित्रघ्ने । शिवाय । हंसाय । नायकाय । प्रियदर्शनाय । शुद्धाय ।
विरोचनाय । केशिने । सहस्रांशवे । प्रतर्दनाय । धर्मरश्मये ।
पतङ्गाय । विशालाय । विश्वसंस्तुताय । दुर्विज्ञेयगतये नमः । ६०

ॐ शूराय नमः । तेजोराशये । महायशसे । भ्राजिष्णवे ।
ज्योतिषामीशाय । विष्णवे । जिष्णवे । विश्वभावनाय । प्रभविष्णवे ।
प्रकाशात्मने । ज्ञानराशये । प्रभाकराय । आदित्याय । विश्वदृशे ।
यज्ञकर्त्रे । नेत्रे । यशस्कराय । विमलाय । वीर्यवते । ईशाय नमः । ८०

ॐ योगज्ञाय नमः । योगभावनाय । अमृतात्मने । शिवाय । नित्याय ।
वरेण्याय । वरदाय । प्रभवे । धनदाय । प्राणदाय । श्रेष्ठाय ।
कामदाय । कामरूपधृके । तरणये । शाश्वताय । शास्त्रे ।
शास्त्रज्ञाय । तपनाय । शयाय । वेदगर्भाय नमः । १००

ॐ विभवे नमः । वीराय । शान्ताय । सावित्रीवल्लभाय । ध्येयाय ।
विश्वेश्वराय । भर्त्रे । लोकनाथाय । महेश्वराय । महेन्द्राय ।
वरुणाय । धात्रे । विष्णवे । अग्नये । दिवाकराय नमः । ११५

इति नरसिंहपुराणे सूर्याष्टोत्तरशतनामावलिः विश्वकर्मकृता समाप्ता ।